श्रीमती

# वेदस्तुतिः

અનુવાદકઃ—

**મ. ગ. શાસ્ત્રી.**

મુદ્રકઃ—ગોવિંદજી ડાહ્યાભાઇ નાયક.
મુદ્રણસ્થાનઃ—શ્રી અનાવિલ બન્ધુ પ્રેસ.
બરાનપુરી ભાગળ, ભાજીવાળી પોળ, સુરત.

પ્રકાશકઃ—ઉજમશી બાપુજી કાપડીઆ,
પુષ્ટિસુધાકાર્યાલય, ધંધુકા.

પ્રતિ
૫૦૦.

મુલ્ય
૦—૧૦—૦.

મુમુક્ષુગૃહસ્થશ્રેષ્ઠિજયકૃષ્ણદાસકૃષ્ણદાસપોપટસ્મારકગ્રન્થરત્નચતુર્થં.

IV / 1925

21-11-1925

**પૂર્વગ્રન્થદાન.**

| | |
|---|---|
| ૧. ન્યાયાદેશ. | ૦–૨–૦ |
| ૨. સિદ્ધાન્ત રહસ્ય. | ૦–૨–૬ |
| ૩. An Examination of Sankara's Sāmkhya refutation | 1–0–0 |

શ્રીમદ્વલ્લભાચાર્યવિરચિતશ્રુતિગીતાકારિકાસૂક્ષ્મટીકાસહિતાનૂદિતા

## ॥ श्रुतिगीतापरिचयः ॥

શ્રીમદ્ભાગવતના કથકને ક્લેશદાયિની પરન્તુ વસ્તુતઃ સર્વક્લેશહારિણી શ્રુતિગીતા વા વેદસ્તુતિ શ્રીમદ્ભાગવતશાસ્ત્રનું પરમ ભૂષણ છે. નિરોધલીલાકૃદ્ ધર્મિસ્વરૂપના યશનું અત્ર પ્રતિપાદન છે. આ અધ્યાયનાં શ્રીસુબોધિનીજીની સમાપ્ત્યનન્તર જ દશમસ્કન્ધની અવશિષ્ટા અધ્યાયત્રયીનાં શ્રીસુબોધિનીજી સમાપીને મુક્તિલીલાપ્રતિપાદક એકાદશમાં પ્રવેશીને તત્ર આવશ્યક ચતુઃપઞ્ચ અધ્યાયનાં શ્રીસુબોધિનીજી સિદ્ધ કરીને સત્વર-એકાદ જ વર્ષના અભ્યન્તર-જ શ્રીમદ્વલ્લભાધીશ્વરે પુષ્ટિમાર્ગીયવ્યસનદશાસૂચક સંન્યાસનો પરિગ્રહ કરી લીધો, તેથી આ અધ્યાયનાં શ્રીસુબોધિનીજીમાં અન્તિમમાં અન્તિમ નિજ વિનિશ્ચયનો સઙ્ગ્રહ કર્યો છે એમ કોઇ પણ વાચકને સિદ્ધાન્તની અને ભાષાની અદ્વિતીયા પ્રૌઢિથી પ્રતીત થયા વિના રહેશે નહિ. શ્રીમદ્વલ્લભાચાર્યજીએ શ્રુતિસમન્વયવિષયક નિતાન્ત પરિપક્વ પુનર્વિનિશ્ચયના કોઇ પણ પ્રામાણિક જિજ્ઞાસુને અત્ર બહુ જ શ્રોતવ્ય મન્તવ્ય નિદિધ્યાસિતવ્ય પ્રાપ્ત થઈ જાય છે. સમસ્ત નિગમને અષ્ટાવિંશતિ યૂથમાં વ્યસ્ત કરીને પ્રતિયૂથનું સમન્વયસ્વારસ્ય પ્રતિશ્લોકના વ્યાખ્યાનના અન્તમાં એટલું તો વિશદ કર્યું છે કે તેથી પૃથક્ સૂચિકાની પણ આવશ્યકતા રહેતી નથી, તથાપિ શ્રુતિસમન્વયના તે સ્વારસ્યનું પણ સ્પષ્ટતમ કથન તત્તચ્છ્લોકવ્યાખ્યાનાન્ત સમાપ્તિમાં કારિકારૂપે પણ કરીને શ્રીમદાચાર્યચરણે નિજ અનુગ્રહમાત્રનો જ સાક્ષાત્કાર સદ્વાચકને કરાવ્યો છે.

સૂક્ષ્મટીકાના અનુવાદમાં મેં વિભાગત્રય કલ્પ્યા છે, પ્રથમ વિભાગમાં શ્લોકનો અક્ષરાર્થ છે, દ્વિતીયમાં કારિકાનો અક્ષરાર્થ છે, અને તૃતીયમાં શ્રીસુબોધિનીજીમાંથી પણ પુષ્કલ ફક્કિકાનો નિવેશ કરીને સૂક્ષ્મટીકાને પણ અલઙ્કૃત કરવાનો મારો અતિનમ્ર પ્રયાસ છે, આ અધ્યાયનાં શ્રીસુબોધિનીજીના અભ્યાસકને આ પ્રયાસ સોપાન થઈ પડશે. સમાહના સત્વર કથનમાં પણ સહાયક થઈ પડે એ સદુદ્દેશથી અનુવાદવિભાગમાં પ્રથમ મૂલ શ્લોકનું મુદ્રણ કરીને અધસ્તાત્ કારિકાનો પણ ઉપન્યાસ કર્યો છે, અને તેથી કારિકોપરિ દૃષ્ટિપાતમાત્ર થતા જ મૂલ શ્લોકનો સ્વપીત આશય સ્મરણમાં આવી જતાં દ્રુતતમ કથનમાં પણ કાલવિલમ્બની ભીતિનો અવકાશ ન રહેતાં શ્રોતૃજનસમક્ષ આ અધ્યાયને યાવચ્છક્ય ન્યાય અર્પી શકાતાં કથકોપરિ આક્ષેપનો પણ પરિહાર સુશક્ય થઈ રહેશે.

જ્યારે હું વડોદરા કૉલેજમાં અધ્યયન કરતો હતો ત્યારે મહેતા પોલમાં શ્રીગોવર્ધનનાથજીના મન્દિરમાં કીર્તન કરતા નટપુરસ્થ કેશવલાલભાઈનો મને સમાગમ થયો. મૃગીથી પીડિત આ ગુણી શરીરે અતિકૃશ હતા, તથાપિ પુષ્ટિમાર્ગીય સઙ્ગથી સુપુષ્ટ થઈ જતા, અને વે. શા. સ. બદરીનાથ-શાસ્ત્રીજીના ગૃહની પઙ્ક્તિના જ અપરાન્તમાં વસતા શ્રીગૌડ બાલકૃષ્ણ વૈદ્યરાજના[1] ગૃહમાં શનિરવિવારે શ્રીવલ્લભાધીશ્વરના ભાષ્યાદિ ગ્રન્થો હું વાચતો તે મણ્ડલમાં[2] સાગ્રહ આ કેશવલાલભાઈ નિયત ઉપસ્થિત થતા. મારા ઋગ્વેદપાઠના સ્વરથી સુપ્રસન્ન આ કીર્તનકારનો મને કીર્તન અધ્યાપવાનો મનોરથ સફલ થઈ શક્યો નહિ, કારણ કે કૉલેજહૉસ્ટેલમાંથી મારા ગુરુ શ્રીકલ્યાણરાયજીના મન્દિરમાં-અત્ર સમ્પ્રતિ પઞ્ચગૃહમુખ્યનિધિ શ્રીકલ્યાણરાયજી વિરાજે છે તત્ર-પ્રતિદિન દર્શનાર્થ જ ગત્યાગતિમાં મારો એક યામ સુવ્યતીત થઈ જતો. શ્રીગોવર્ધનનાથજીના મન્દિરમાં ઉચિત સત્કારના પણ અભાવથી વિરક્ત કેશવલાલભાઈએ જીવનના ઉત્તર ભાગમાં તો નવી પોલમાં સ્થિત મન્દિરમાં કીર્તનની સેવા કરીને દેહક્ષપણ કર્યું. જેમ જેમ કેશવલાલભાઈ સાથે મારો પરિચય થતો ગયો તેમ તેમ વિશ્વાસની પણ વૃદ્ધિ જ થઈ, અને તેથી આ બાવાજીએ મને શ્રીશૃઙ્ગારરસમણ્ડનનાં અને વેદસ્તુતિની

૧. આ વૈદ્યને વૃદ્ધાવસ્થામાં જ સુરતવાલા શ્રીગરધરજીએ બ્રહ્મસમ્બન્ધમન્ત્રનું દાન કર્યું હતું.

૨. વૈદ્યરાજ બાલકૃષ્ણ શ્રીગૌડ, કીર્તનીઆજી કેશવલાલભાઈ, શ્રીદાઉજીના છોટા મુખ્યાજી ગણપતિ-રામભાઈ સાચોરા, મુરલીધર સમાધાનીજી મોઢ, ચીમનલાલભાઈ લાખાવાલા. અને કેશવલાલભાઈ ગોળવાલા-આ ષટ્ક આ મણ્ડલીમાં અગ્રગણ્ય હતું, જેમાંની અન્તિમ દ્વયી જ સમ્પ્રત વર્ધમાન છે. શેઠ સામલ બહેચરવાલા ચીમનલાલભાઈ સાથે મારો સમ્બન્ધ ૧૯૯૭માં જ થયો.

॥ श्रीकृष्णाय नमः ॥

॥ श्रीगोपीजनवल्लभाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

## ॥ अथ श्रीमद्वल्लभाचार्यविरचितसूक्ष्मटीकासहिता ॥

# ॥ वेदस्तुतिः ॥

श्रुतय ऊचुः ॥

जय जय जह्यजामजित दोषगृभीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभगः ।
अगजगदोकसामखिलशक्त्यवबोधक ते
क्वचिदजयात्मना च चरतोनुचरेन्निगमः ॥ १ ॥

श्रुतय ऊचुः जय जय जह्यजामिति । हे अजित न केनापि जित । त्वं जय जय सर्वोत्कर्षेण विराजमानो भव । अथ च अजां निद्रां जहि त्यज । अथवा अगजगदोकसां जीवानां अजां मायां जहि । कथम्भूताम् ? दोषगृभीतगुणां अगजगदोकसाम् । जीवानां स्वरूपाज्ञानार्थं गृभीता गुणा सत्त्वरजस्तमोरूपा यया ताम् । कथम्भूतस्त्वम् । यत् यस्मात्कारणात्त्वमात्मनैव स्वरूपेणैव समवरुद्धा अन्तर्निहिता समस्ता भगा ऐश्वर्यादयो येनैतादृशोसि । अगजगदोकसां हे अखिलशक्त्यवबोधक स्थावरजङ्गमजीवानां अखिलानीन्द्रियाणि तेषां शक्त्यवबोधक शक्तिप्रकाशकेत्यर्थः । आत्मना चरतः स्वरूपेणैव क्रीडतस्ते तव निगमो अस्मल्लक्षणः अनुचरेत् सेवनं करोतीत्यर्थः । कथम्भूतस्य ते ? क्वचिदजया च चरतः ॥ १ ॥

---

इह वेदस्तुता'वत्रानुक्तइगाथे'तिछन्दोङ्गे लक्षितायां गाथायामन्तर्भूतं'मात्रितथं नजभजभा जलौगि'ति पिङ्गलछन्दस्सूत्रलक्षितमात्रितथं छन्द । वृत्तरत्नाकरे 'यदि भवतो नजौ भजजला गुरु नर्कुटक'मिति लक्षितमर्कटकसंज्ञमेतदेव । तथा हि 'यदि नगणजगणौ भगणो जगणद्वयं लघुगुरू च तद्वृत्तमर्कटकमात्रितथमित्यन्येन समचतुष्पद्भिर्यैर्विधैर्था श्रीभागवतदशमस्कन्धे वेदस्तुति'रिति भावप्रदीपिकाकारो जनार्दनः । छन्दोमञ्जरीकारगङ्गादासस्त्वेतस्यैव नामान्तरं नर्दटकमाह 'यदि भवतो नजौ भजजला गुरु नर्दटक'मिति ॥

बृहदुपलब्धमेतदवयन्त्यवशेषतया
यत उदयास्तमयौ विकृतेर्मृदिवाविकृतात् ।
अत ऋषयो दधुस्त्वयि मनोवचनाचरितं
कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥२॥

बृहदुपलब्धमेतदिति । अवशेषतयोपलब्धं समधिगतमेतच्चराचरं जगत् ऋषयो ब्रह्मविदो वेदाश्च बृहदित्येवावयन्ति अक्षरब्रह्मत्वेन जानन्तीत्यर्थः । यतो ब्रह्मणः सकाशाशादुदयास्तमयौ जगत उत्पत्तिप्रलयौ भवतः । तत्र दृष्टान्तः विकृतेर्मृदिवाविकृतात् । घटशरावादेर्यदा सम्भवः प्रलयश्च तदाविकृताद्देशोर्मृदेवावशिष्यते । अवशेषतया तिष्ठतीत्यर्थः । अतःकारणादृषयो वेदद्रष्टारो वेदा वा मनोवचनाचरितं यत्किञ्चिन्मनसा विभाव्यं यत्किञ्चिद्वाचानुद्यं तत्सर्वं त्वय्येवदधुरवधारयन्तीत्यर्थः । यथा नृणां भुवि दत्तपदानि अयथा अन्यथा कथं भवन्ति ? न भवन्तीत्यर्थः । भूमावेव पतन्ति ॥२॥

इति तव सूरयस्त्र्यधिपतेखिललोकमल-
क्षपणकथामृताब्धिमवगाह्य तपांसि जहुः ।
किमुत पुनः स्वधामविधुताशयकालगुणाः
परम भजन्ति ये पदमजस्रसुखानुभवम् ॥ ३ ॥

इति तवेति । हे अधिपते । इति एवं निश्चित्य सूरयः तव अखिललोकमलक्षपणकथामृताब्धिमवगाह्य तपांसि साधनक्लेशान् जहुः । हे परम । ये भवत्सुखानुभवं पदं तव चरणारविन्दं भजन्ति ते पुनः किमुत ? कथम्भूतास्ते ? स्वधामविधुताशयकालगुणाः स्वस्य धाम स्फूर्तिस्तेनैव विधुता दूरीकृता आशयगुणाः कामादयः कालगुणा जरादयो यैस्ते ॥ ३ ॥

दृतय इव श्वसन्त्यसुभृतो यदि तेनुविधा
महदहमादयोण्डमसृजन् यदनुग्रहतः ।
पुरुषविधोन्वयोत्र चरमोन्नमयादिषु यः
सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥४॥

इतय इवेति । यदि ये जीवास्तेनुविधास्त्वदनुविधास्त्वत्सेवायां सन्मुखास्तदा त ासुभृतः सफलप्राणाः। अन्यथा इतय इव भस्रा इव श्वसन्ति परोपद्रवार्थमेव जीव- न्त्यर्थः । यदनुग्रहतो महदहमादयो ब्रह्माण्डमसृजन् । अन्नमयादिषु यश्चरमः अन्त्य ।।नन्दमयः सः अत्र देहेषु पुरुषविधः अन्वयश्च । सदसतः परं कार्यकारणतः परं यत्त्वमेव । अथ यदेषु कार्यकारणात्मकसर्ववस्तुषु अवशेषं ऋतं सत्यं तत्त्वमेवेत्यर्थः ॥४॥

उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः
परिसरपद्धतिं हृदयमारुणयो दहरम् ।
तत उदगादनन्त तव धाम शिरः परमं
पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥५॥

उदरमुपासते य इति । ये ऋषिवर्त्मसु वेदोक्तमार्गेषु उदरं कर्म उपासते ते कूर्पदृशः रजोपिहितदृष्टयः । ये दहरं हृदयमुपासते ते आरुणयः अरुणवंशजा अल्प- प्रकाशयुक्ताः । कथम्भूतं हृदयम् ? परिसरपद्धतिं परितः सरन्तीति परिसरा नाड्य- स्तासां पद्धतिर्मार्गो यत्र । हे अनन्त । परमं तव धाम । अतस्त्रैलोक्यात्कालादपि शिर ऊर्ध्वमेवोदगात् । यत् समेत्य यद्भगवत्स्वरूपं प्राप्य प्राणिन इह संसारे कृतान्तमुखे न पतन्ति ॥५॥

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
तरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिः ।
अथ वितथास्वमूष्ववितथं तव धाम समं
विरजधियोन्वयन्त्यभिविपण्यव एकरसम् ॥६॥

स्वकृतविचित्रयोनिष्विति । स्वेनैव कृतासु देवमनुष्यादिशरीरेष्वनुरूपविचित्रयो- नेषु हेतुतया कारणरूपतया तत्र स्थितस्त्वं विशन्निव प्रवेशं कुर्वन्निव तरतमतः देवति- मनुष्यादिभावेन राजादिभावेन च चकास्सि दीप्यसे । अत्र दृष्टान्तः । अनलोग्निस्त- । यथाग्निः सर्वत्र काष्ठेषु स्थित एव पुनस्तत्र प्रविशन् वर्णभेदं दीर्घवक्रादिकं च तनुते था भगवानपि स्वकृतानुकृतिः स्वकृतमनुकरोति । अथ वितथासु मिथ्याभूतास्वमूषु योनिषु तवावितथं सत्यं धाम विरजधियोन्वयन्ति जानन्तीत्यर्थः । कथम्भूतं धाम?

समं एकरसं च । कथम्भूता विरजधियः ? अभिविपण्यवः अभितः सर्वत इह लोके परलोके च विशेषेण गताः पण्यवो व्यवहारा येषां ते ॥६॥

स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं
तव पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम् ।
इति नृगतिं विविच्य कवयो निगमावपनं
भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः ॥७॥

स्वकृतपुरेष्विति । भवत्कृतेषु पुरेषु देवतिर्यङ्मनुष्यादिशरीरेष्वखिलशक्तिधृतस्तव पुरुषं जीवं अंशकृतं अंशेन कृतं त्वदंशं ये वदन्ति । कथम्भूतम् ? अबहिरन्तरसंवरणम् । न विद्यते बाह्याभ्यन्तरभेदेन संवरणं आवरणं यस्य तम् । इति नृगतिं विविच्य एवम्प्रकारेण जीवगतिं ज्ञात्वा कवयो निपुणा भवतोऽङ्घ्रिं चरणमभवं जन्मादिनिवर्तकमुपासते । कथम्भूतं ? निगमावपनं निगमा वेदा आसमन्तादुप्यन्तेऽस्मिंस्तत् । यथा सकलबीजानामावपनस्थानं क्षेत्रं तथा सकलवेदोक्तकर्मफलाना सफलत्वमत्रैवेत्यर्थः । कथम्भूताः कवयः ? भुवि विश्वसिताः भूमावेव भगवति विश्वासं कुर्वन्तः ॥७॥

दुरवगमात्मतत्त्वनिगमाय तवात्ततनो-
श्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ।
न परिलषन्ति केचिदपवर्गमपीश्वर ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥८॥

दुरवगमात्मतत्त्वनिगमायेति । दुःखेनाप्यवगमो गमो ज्ञानं यस्य स आत्मा केनापि ज्ञातुमशक्यस्तस्य च तत्त्वमपि दुर्ज्ञेयं तस्य निगमाय ज्ञानाय आत्ततनोः स्वीकृतदेहस्य तव चरित्ररूपो यो महामृतसमुद्रस्तत्र परिवर्तो बहुधालोडनं तदर्थं परिश्रमणाः परितः श्रमो येषां ते हे ईश्वर एतादृशाः केचिद्विरला भक्ता अपवर्गमपि मोक्षसुखमपि न परिलषन्ति न वाञ्छन्तीत्यर्थः । कथम्भूता भक्ताः ? ते तव चरणसरोजैकाश्रया हंसास्तेषां कुलं समूहस्तत्सङ्गार्थं विसृष्टं गृहं यैस्ते ॥८॥

त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियव-
च्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ।

न बत रमन्त्यहो असदुपासनयात्महनो
यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥९॥

**त्वदनुपथमिति** । **कुलायः** पक्षिणां नीडं तथा जीवस्य नीडं शरीरमिदं कुलायं नीडरूपं शरीरं **त्वदनुपथं** त्वदनुगुणसेवकरूपं आत्मवत्सुहृद्वत्प्रियवच्चरति जीवस्य हितमेव करोति । **तथा उन्मुखे त्वयि** स्वसेवार्थं ब्राह्मणादिदेहदानेन सम्मुखे त्वयि सति अथ च **प्रिये आत्मनि** आत्मरूपे च **न रमन्ति असदुपासनया** क्षुद्रदेवतोपासनया इन्द्रियाणां वोपासनया ये **यदनुशयाः** सन्तः यस्मिन्नसत्सङ्गे **अनुशयोन्तःकरणं** येषां ते **आत्महनः** आत्मघातिनः । **अहो** आश्चर्ये । **बतेति** खेदे । सकलेन्द्रियसामर्थ्ययुक्तं भगवद्वैदिकधर्मौपायिकं सर्वानुगुणं शरीरं प्राप्य अथ च सर्वात्मनोन्मुखे त्वयि न **रमन्ति** सेवाद्यासक्तिं न कुर्वन्ति ते **कुशरीरभृतः कुशरीरं** मोक्षानुपयोगि मुहुर्मुहुर्जन्ममरणस्वभावरूपं भूत्वा वर्तमाना **उरुभये** महद्भययुक्ते संसारे परिभ्रमन्तीत्यर्थः ॥९॥

निभृतमरुन्मनोक्षदृढयोगयुजो हृदि यन्
मुनय उपासते तदरयोपि ययुः स्मरणात् ।
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो
वयमपि ते समाः समदृशोङ्घ्रिसरोजसुधाः ॥१०॥

निभृतेति । **मुनयो** यद्भगवत्स्वरूपं **हृदि** मानसपूजादिना **उपासते तदेव** भगवत्स्वरूपं **तदरयोपि** शिशुपालादयोपि **स्मरणाद्ययुः** । कथम्भूता **मुनयः** ? **निभृतमरुन्मनोक्षदृढयोगयुजः** नितरां भृतो **मरुद्वायुर्मन अक्षाणि** इन्द्रियाणि च तैः कृत्वा ये **दृढं योगं** युञ्जते । अथ च **स्त्रियः** गोप्योपि तदेव भगवत्स्वरूपं **ययुः** । कथम्भूताः **स्त्रियः** ? **उरगेन्द्रभोगभुजदण्डविषक्तधियः** उरगेन्द्रस्य शेषस्य **भोगः** काय इव यो बाहुदण्डस्तत्र **विषक्ता धीर्यासां** तादृश्यः । **वयञ्च** श्रुतयः सर्वादरणीयास्तदेव प्राप्ताः । एवं स्त्रियः पुरुषाश्च सर्व एव **ते** तव **समाः** । यतो भवान् **समदृक्** सर्वानेव स्वकीयान् समत्वेन मन्यते । कथम्भूताः सर्वे ? **अङ्घ्रिसरोजसुधाः** अङ्घ्रिसरोजं सुष्ठु धारयन्तीति तथा ॥१०॥

क इह नु वेद बतावरजन्मलयोग्रसरं
यत उदगादृषिर्यमनु देवगणा उभये ।

तर्हि न सन्न चासदुभयं न च कालजवः
किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥ ११ ॥

क इहेति। इह संसारे वर्तेति खेदे। अग्रसरं सर्वप्राणिनां पूर्वमेव सिद्धं त्वां नु इति वितर्के अवरजन्मलयः पश्चाज्जन्मलयौ यस्य तादृशः को वेद जानाति? न कोपीत्यर्थः। यतः सकाशादृषिर्ब्रह्मा उदगात् उत्पन्नो जात इत्यर्थः। यमनु ब्रह्माणमनु पश्चात उभये देवगणा उत्पन्नाः। यर्हि भगवान् सर्वमवकृष्य शयीत शयनं करोति तर्हि न सत् कार्यं न चासत् कारणं न च उभयं मनः कालजवः कालवेगोपि न। न वा तत्र तस्मिन्समये किमपि शास्त्रं वेदपुराणादि ॥ ११ ॥

जनिमसतः सतो मृतिमुतात्मनि ये च भिदां
विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः।
त्रिगुणमयःपुमानितिभिदा यदबोधकृता
त्वयि न ततः परत्र स भवेदवबोधरसे ॥१२॥

जनिमसत इति। नैयायिकाः असतो घटादेर्जनिं उत्पत्तिं वैशेषिकादयस्तु सतः आत्मनो मृतिं मरणं चाहुः तथा मीमांसकादयः आत्मनि भिदां जीवानां भेदमङ्गीकुर्वन्ति अन्ये पुनः साङ्ख्यैकदेशिनो योगिनश्च विपणं ऋतं कर्मफलं सत्यं मन्यन्ते ते सर्वे आरुपितैः आरोपितैः भ्रमैः कृत्वा स्मरन्ति निरूपयन्ति अथ च शिष्येभ्य उपदिशन्ति। त्रिगुणमयःपुमानितिभिदा भेदो यत् यस्मात् अबोधकृता अज्ञानकृता भगवत्स्वरूपाज्ञानादेव जायते। तदेवाह ततःपरत्रेति। त्रिगुणरूपात् परे त्वयि अवबोधरसे ज्ञानैकघने स न भवेत् अबोधो न भवेत् ॥१२॥

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्
सदभिमृशन्त्यशेषमिदमात्मतयात्मविदः।
न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया
स्वकृतमनुप्रविष्टमिदमात्मतयावसितम् ॥१३॥

सदिव मन इति। आमनुजात् ब्रह्मतृणस्तम्बमारभ्य मनुष्यपर्यन्तात् असन्मनस्त्वयि सदिव विभाति। कथम्भूतं मनः? त्रिवृत् गुणत्रयवेष्टितम्। आत्मविदो ज्ञानिन इदं

जगत् अशेषं सम्पूर्णं आत्मतया ब्रह्मतया सदभिमृशन्ति सर्वं ब्रह्मेति जानन्ति । यथा कनकार्थिनो वणिजः कनकात्मतया कनकस्य विकृतिं कुण्डलादिकं न हि त्यजन्ति तथा स्वकृतं भगवता कृतं अनुप्रविष्टं सर्जनानन्तरं भगवतोनुप्रवेशो यस्मिंस्तथाविधमिदं जगत् ब्रह्मतयात्मविद्भिरवसितं निर्धारितमित्यर्थः ॥१३॥

तव परि ये चरन्त्यखिलसत्त्वनिकेततया
त उत पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः ।
परिवयसे पशूनिव गिरा विबुधानपि तां-
स्त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः ॥ १४॥

तव परि ये चरन्तीति । ये तव त्वां अखिलसत्त्वनिकेततया अखिलसत्त्वेषु प्राणिमात्रेषु निकेतं स्थानं यस्य सः । तस्य भावस्तत्ता । तथा परिचरन्ति सेवां कुर्वन्ति उत त एव निर्ऋतेर्मृत्योः शिरः अवगणय्य अवगणनां कृत्वा पदाक्रमन्ति तान् प्रसिद्धान् मृत्योरपि उत्कृष्टान् विबुधानपि त्वं पशूनिव गिरा वाचा परिवयसे बध्नासि । त्वयि कृतसौहृदास्ते खलु निश्चयेन पुनन्ति अर्थाज्जगत् पुनन्तीत्यर्थः । न ये विमुखाः न तु तपस्विनो वा धार्मिका यतस्त्वयि विमुखाः ॥ १४ ॥

त्वमकरणः स्वराडखिलकारकशक्तिधर-
स्तव बलिमुद्वहन्ति समदन्त्यजयानिमिषाः ।
वर्षभुजोखिलक्षितिपतेरिव विश्वसृजो
विदधति यत्र ये त्वाधिकृता भवतश्चकिताः ॥ १५ ॥

त्वमकरण इति । त्वमकरण करणमिन्द्रियं तद्रहितः । पुनः स्वराट् स्वेनैव रूपेण राजत इति तथा । अथ च अखिलकारकशक्तिधरः सकलक्रियाकलापानां शक्तिं सामर्थ्यं धरतीति तथा । अतोनिमिषा देवा अजया मायया तव बलिमुद्वहन्ति समदन्ति च भगवते बलिं दत्वा तच्छेषं स्वयं गृह्णन्ति यथा अखिलक्षितिपतेः सार्वभौमस्य राज्ञो वर्षभुजो नववर्षाधिपतयः खण्डमण्डलपतयो बलिं करं वहन्ति । किञ्च ये तु विश्वसृजो यत्र यस्मिन्कार्ये त्वयाधिकृताः स्थापिता भवतस्त्वत्तश्चकिताः भीताः सन्तस्तत्तद्विदधति तत्तत्कार्यं कुर्वन्तीत्यर्थः ॥ १५ ॥

स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो
विहर उदीक्षया यदि परस्य विमुक्त ततः ।
न हि परमस्य कश्चिदपरो न परश्च भवे-
द्वियत इवापदस्य तव शून्यतुलां दधतः ॥ १६ ॥

**स्थिरचरजातय** इति । हे **ततो विमुक्त** मायासम्बन्धरहित । **यदि परस्य तव उदीक्षया** उद्गतेच्छया **विहरो** विहारः क्रीडा तदा **स्थिरचरजातयः** स्थावरजङ्गमभेदाः **स्युः** स्वयमेवोत्पद्यन्ते । कथम्भूताः ? **अजयोत्थनिमित्तयुजः** अजया प्रकृत्या उत्थिता सत्त्वस्तयैवोत्थितं **निमित्तं** कर्मापि युञ्जत इति तथा । **न हि परमस्य** अक्षरादपि अग्रेस्थितस्य **तव परश्चापरश्च** कश्चिद् **भवेत् वियत** इवाकाशस्येव । कथम्भूतस्य ? **अपदस्य** स्थानरहितस्य । अथ च **शून्यतुलां** शून्यसमतां **दधतः** ॥ १६ ॥

अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगता-
स्तर्हि न शास्यतेतिनियमो ध्रुव नेतरथा ।
अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्
सममनुजानतां यदमतं मतदुष्टतया ॥१७॥

**अपरिमिता** इति । **अपरिमिताः** असङ्ख्याता **ध्रुवाः** नित्याः **तनुभृतो** जीवाः हे **ध्रुव यदि सर्वगताः** व्यापका भवेयुः **न तर्हि शास्यतेति**कृत्वा त्वया **नियमो** नियमनञ्च न सिध्येदित्यर्थः । जीवस्याव्यापकत्वे नियम्यनियामकभावो भवेदित्यर्थः । **नेतरथा** जीवस्य व्यापकत्वे भगवतोऽणुत्वे नियम्यनियामकभावो नोपपद्यत इतिभावः । **अजनि च यन्मय**मिति । **च** पुन**र्यन्मयं** ब्रह्ममयं ब्रह्मात्मक**मजनि** जीवाख्यञ्जातं **तदविमुच्य** ब्रह्मात्मकत्वमपरित्यज्य भगवत्स्वरूपं **नियन्तृ** जीवस्य नियामकं **भवे**दित्यर्थः । **समं** सर्वं समं ब्रह्मेत्येव**मनुजानतां** ज्ञानिनाम्मतं **दुष्टतया** यद्यस्मात् **अमतं** अननुमतं न सम्मतमित्यर्थः ।१७॥

न घटत उद्भवः प्रकृतिपूरुषयोरजयो-
रुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् ।
त्वयि त इमे ततो विविधनामगुणैः परस्य
सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥१८॥

न घटत उद्भव इति । अजयोः प्रकृतिपुरुषयोरुद्भव उत्पत्तिः न घटत इति उभययुजा प्रकृतिपुरुषसंयोगेन अमुभृतो जीवा भवन्ति यथा जलवायुसंयोगेन बुद्बुदा भवन्ति तद्वत्, यतः सर्वकारणं त्वमेव ततः कारणात् त्वयि त इमे जीवाः परस्य तव विविधनामगुणैस्सह निलिल्युः निलीना भवन्ति अर्णवे सरित इव । अथ च मधुनि अशेषरसा यथा लीना भवन्ति तद्वदित्यर्थः ॥१८॥

नृषु तव मायया भ्रममभीष्ववगत्य भृशं
त्वयि सुधियोभवे दधति भावमनुप्रभवम् ।
कथमनुवर्ततां भवभयं तव यद् भ्रुकुटिः
सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥ १९ ॥

नृषु तवेति । सुधियः अभीषु तव मायया भ्रमं दुःखरूपकालादिग्रासं अवगत्य ज्ञात्वा अभवे त्वयि भावं दधाति । कथम्भूतं भावम्? अनुप्रभवम् । तेषां भवभयं संसारभयं कथमनुवर्ततां कथम्भवेदित्यर्थः । कथम्भूतः कालः ? त्रिणेमिः शीतातपवर्षरूपास्त्रयो नेमयो यस्य सः ॥१९॥

विजितहृषीकवायुभिरदान्तमनस्तुरगं
य इह यतन्ति यन्तुमतिलोलमुपायखिदः ।
व्यसनशतान्विता समवहाय गुरोश्चरणं
वणिज इवाज सन्त्यकृतकर्णधरा जलधौ ॥२०॥

विजितहृषीकवायुभिरिति । विशेषेण जितानि स्वाधीनीकृतानि हृषीकाणीन्द्रियाणि वायुश्च यैस्तैरपि अदान्तमनस्तुरगमतिलोलं ये संसारिणः स्वेनैव यन्तुं निग्रहीतुं यतन्ति यत्नं कुर्वन्ति ते उपायखिदः साधनेष्वेव क्लेशं प्राप्नुवन्त इह संसारे सन्ति तिष्ठन्तीत्यर्थः । हे अज किं कृत्वा क्लेशं प्राप्नुवन्ति ? व्यसनशतान्विताः सन्तो गुरोश्चरणं समवहाय । कस्मिन् के इव ? अकृतकर्णधरा वणिजो जलधाविव ॥२०॥

स्वजनसुतात्मदारधनधामधरासुरथै-
स्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ।

इति सदजानतां मिथुनतो रतये चरतां
सुखयति को न्विह स्वविहते स्वनिरस्तभगे ॥२१॥

स्वजनसुतेति । अयतः त्वदाश्रयं कुर्वतः पुरुषस्य सर्वरसे आत्मनि आत्मत्वेन स्फुरिते त्वयि सति नृणां स्वजनादिभिः किम् ? न किमपीत्यर्थः । असुशब्देन प्राणाः । इति सत् एवम्प्रकारकं परमार्थवस्तु तदजानतां इह संसारे नु इति वितर्के कः सुखयति सुखं ददाति ? न कोपीत्यर्थः । कथम्भूतानाम् ? अजानतां रतये ग्राम्यसुखाय मिथुनतो मिथुनीभूय चरताम् । कथम्भूते संसारे ? स्वविहते । स्वत एव विशेषेण हते पतितगृह इव विशीर्णे तत्रापि सुष्ठु निरस्ता भगा ऐश्वर्यादयो यस्मिन्नेतादृशे ॥२१॥

भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदा-
स्त उत भवत्पदाम्बुजहृदोघभिदङ्घ्रिजलाः ।
दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे
न पुनरुपासते पुरुषसारहरावसथान् ॥२२॥

भुवि पुरुपुण्यतीर्थेति । ये विमदा ऋषयो भुवि पुरूणि बहूनि पुण्यतीर्थानि गङ्गाकुरुक्षेत्रादीनि अथ च तीर्थानां गुरूणां गृहाणि ये सेवन्ते । कथम्भूताः ? अघाभिदङ्घ्रिजलाः । अघं पापं भिनत्ति विदारयतीत्यघभिद् एतादृशं अङ्घ्र्योर्जलं येषां ते तथा । अथ च ते पुनर्भवत्पदाम्बुजहृदः भवच्चरणारविन्दं हृदि येषां ते ये नित्यसुखे आत्मनि त्वयि सकृन्मनो दधति ते पुनः पुरुषसारहरावसथान पुरुषाणां सारं विवेकादिकं हरन्ति एतादृश आवसथान् गृहान् न उपासते ॥२२॥

सत इदमुत्थितं सदिति चेन्ननु तर्कहतं
व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ।
व्यवहृतये विकल्प इषितोन्धपरम्परया
भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥२३॥

सत इदमुत्थितमिति । सतः ब्रह्मणः सकाशादिदमुत्थितं उत्पन्नं जगत् सद्भवति ब्रह्म भवति इति चेन्न । नु इति वितर्के । तर्केण युक्त्या हतं बाधितम् । सत उत्थित सदिति-

पक्षः क्वचिद् व्यभिचरति यथाङ्गनाम्नो राज्ञः सकाशाद्वेनः। शुक्तिकायां रजतं क्वचिन्मृषा भवति न तथोभययुक् सदसदात्मकं जगत् तथा व्यभिचारादिदोषग्रस्तं न भवति। व्यवहृतये व्यवहाराय अन्धपरम्परया विकल्प इषितः इष्टः। ते तव भारती वेदरूपा वाणी उरुवृत्तिभिः रूढिलक्षणादिवृत्तिभिः उक्थपरान् कर्मपरायणान् भ्रमयति ॥२३॥

न यदिदमग्र आस न भविष्यदतो निधना-
दनुमितमन्तरा त्वयि विभाति मृषैकरसे।
अत उपमीयते द्रविणजातिविकल्पपथै-
र्वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥२४॥

न यदिदमिति। यत् यस्मादिदं जगत् अग्रे सृष्टेः पूर्वं न आस अतो निधनात् अनु प्रलयानन्तरञ्च न भविष्यति किन्तु एकरसे त्वयि अन्तरा मध्ये अनुमितं अनुमित्या सिद्धं मृषा विभाति अतो द्रविणजातिविकल्पपथैः द्रविणानां गवादीनां या जातिर्गोत्वादिस्तस्या विकल्पा अवान्तरभेदा स्तएव उपमाने मार्गास्तैर्यथा गोसदृशो गवयस्तथा ब्रह्मसदृशञ्जगत् न तु ब्रह्मरूपमित्यर्थः। एतादृशं वितथमनोविलासं असन्मनोविलासरूपं जगत् ऋतं सत्यं ब्रह्म इति ये अवयन्ति जानन्ति ते अबुधाः ॥२४॥

स यदजया त्वजामनुशयीत गुणांश्च जुषन्
भजति सरूपतां तदनु मृत्युमपेतभगः।
त्वमुत जहासि तामहिरिव त्वचमात्तभगो
महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥ २५ ॥

स यदजयेति। स एव भगवद्रूपो जीवो यत् यस्मात्कारणात् अजया भगवन्मायया कृत्वा अजां अविद्यां प्रकृतिं वानुशयीत तामनुसृत्य जीवभावं प्राप्नुयात्तदा तस्या गुणान् जुषन् सेवमानः सन् स्वचैतन्यं परिभूय सरूपतां जडभावं भजति। तदनु जडतामनु मृत्युमपि प्राप्नोति। कथम्भूतः? अपेतभगः। अपेता निरस्ता ऐश्वर्यादिभगा यस्य। त्वन्तु तां मोहिकां जहासि। अहिः सर्पः त्वचं यथा जहाति तद्वत्। अथ च आत्तभगः स्वीकृतभगः अष्टगुणितेऽणिमाद्यैश्वर्यसहिते महसि पूर्णतेजोरूपे महीयसे विराजसे। अपरिमेयभगः असङ्ख्याता भगा यस्य तादृशस्त्वम् ॥ २५ ॥

यदि न समुद्धरन्ति यतयो हृदि कामजटा
दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ।
असुतृपयोगिनामुभयतोऽप्यसुखं भगव-
न्ननपगतान्तकादनधिरूढपदाद्भवतः ॥ २६ ॥

यदि न समुद्धरन्तीति । यतयोऽपि हृदि स्थिताः कामजटा कामवासना यदि न समुद्धरन्ति दूरीकुर्वन्ति तर्हि तेषामपि भगवान् हृदि गतोऽपि दुरधिगमो दुःखेनापि प्राप्तुमशक्यः । असतां तु सुतरामेव । अस्मृतकण्ठमणिः अस्मृतश्चासौ कण्ठमणिरिव च यो भगवान् । यथा कण्ठमणिः कण्ठे स्थितोऽपि तं न सुखयति प्रत्युत विस्मृत्या दुःखमेव प्रयच्छति तथा हे भगवन् असुतृपयोगिनां प्राणपोषणार्थं य उपायवन्तस्तेषां तूभयतोऽप्यसुखम् । तदुभयं निर्दिशन्ति अनपगतान्तकात् भवतश्चेति । नापगतो यमो यस्मात् स एतादृशः कालः तस्माद्यमसहितः कालोऽपि तेभ्यो दुःखं प्रयच्छति तेन जीवनदशायामपि दुःखम् । ननु भवान् कथं दुःखं प्रयच्छेदप्राप्तः परं भवेदित्याशङ्क्याहुः अनधिरूढपदादिति । नाधिरूढं पदं यस्येति । भगवत्पदं नाधिरूढमिति चिन्ताकुलाः क्लिश्यन्तीत्यर्थः ॥ २६ ॥

त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयो-
र्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ।
अनुयुगमन्वहं सगुण गीतपरम्परया
श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ २७ ॥

त्वदवगमीति । त्वदवगमी त्वत्स्वरूपाभिज्ञो भवदुत्थशुभाशुभयोः भवदर्थं उत्थिते ये शुभाशुभे कर्मणी तयोर्गुणः सुखं विगुणो दुःखं तयोरन्वयाः सम्बन्धाः तान् न वेत्ति न जानाति यदि तर्हि देहभृतां देहाभिमानिनां च गिरो न वेत्ति विधिनिषेधचिन्तापकीर्त्यादिप्रतिपादकवाक्यान्यपि नानुवेत्तीत्यर्थः॥ कुतः? मनुजैः श्रवणाद्यधिकारिपुरुषैः सः प्रसिद्धो भक्तहितकारी अपवर्गगतिस्त्वं अनुयुगं प्रतियुगं अन्वहं प्रतिदिनं सगुणगीतपरम्परया यतः श्रवणभृतः श्रवणेन भृतः ॥ २७ ॥

द्युपतय एव ते न ययुरन्तमनन्ततया
त्वमपि यदन्तराण्डनिचया ननु सावरणाः ।

ख इव रजांसि वान्ति वयसा सह यच्छ्रुतय-

स्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥ २८ ॥

द्युपतय एवेति । द्युपतयः स्वर्गपतयः सुरेन्द्रादयः तेपि ते तव स्वरूपानन्दस्य अनन्ततया अन्तं न ययुः । एवकारेण त एव न ययुरिति न किन्तु त्वमपि न यासि स्वस्वरूपस्य पारं नाधिगतवानसीत्यर्थः । यदन्तरा यस्य भगवतोन्तर्मध्येण्डनिचया अण्डसमूहास्तेपि सावरणाः प्रकृतिपर्यन्तमुत्तरोत्तरं दशगुणावरणयुक्ताः । ननु निश्चये । वयसा कालेन सह वान्ति परिभ्रमन्ति । यत् यस्मात् श्रुतयापि तत्र वान्ति । कथम्भूताः श्रुतयः ? अतन्निरसनेन निषेधमुखेन भवन्निधनाः भवानेव निधनं विश्रामस्थानं यासामेतादृश्यः सत्यः । हि निश्चयेन त्वयि फलन्ति त्वामेव प्रतिपादयन्तीत्यर्थः ॥२८॥

॥ इति श्रीमद्वल्लभाचार्यविरचितसूक्ष्मटीकासहिता वेदस्तुतिः समाप्ता ॥



॥ श्रीकृष्णाय नमः ॥

॥ श्रीगोपीजनवल्लभाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

## ॥ अथ श्रीमद्वल्लभाचार्यविरचिताः श्रुतिगीताकारिकाः ॥

प्राकृताः श्रुतयः सर्वा भगवन्तमधोक्षजम् ।
स्तुवन्ति दोषनाशाय तत्राविष्टो भवेद्यथा ॥१॥

सत्यो हरिः समस्तेषु भ्रमभातेष्वपि स्थिरः ।
अतः सन्तः समस्तार्थे कृष्णमेव विजानते ॥२॥

कथानन्दोक्तिहृदयाः साधनानि न कुर्वते ।
साक्षाद्ये पादसंश्लिष्टास्ते किं वाच्या महाशयाः ॥३॥

कृष्ण एव सदा सेव्यो निर्णीतः पञ्चधा बुधैः ।
शरीरदः प्रेरकश्च सुखदः शेषसम्पदः ॥४॥

कर्मरूपं हरिं केचित् सेवन्ते योगरूपिणम् ।
तेभ्योप्यक्षररूपस्य सेवकाः सम्मताः सताम् ॥५॥

सर्वत्र भगवांस्तुल्यः सर्वदोषविवर्जितः ।
क्रीडार्थमनुकुर्वन् हि सर्वत्रैव विराजते ॥६॥

गुप्तानन्दा यतो जीवा निरानन्दं जगद्यतः ।
पूर्णानन्दो हरिस्तस्माज्जीवैः सेव्यः सुखार्थिभिः ॥७॥

कृष्णे हरौ भगवति परमानन्दसागरः
वर्तते नात्र सन्देहः कथा तत्र नियामिका ॥८॥

असत्सङ्गो न कर्तव्यो भक्तिमार्गस्य बाधकः ।
देहे ह्यनुगुणे कृष्णे नेन्द्रियाणां प्रियं चरेत् ॥९॥

सत्र एव हरेर्भक्तास्तुल्या यान् मन्यते हरिः ।
अतः कृष्णो यथात्मीयान् मन्यते भजनं तथा ॥१०॥

ज्ञानमार्गो भ्रान्तिमूलस्ततः कृष्णं भजेद् बुधः ।
प्रवर्तकं ज्ञानकाण्डं चित्तशुद्धौ यतो भवेत् ॥११॥

नामरूपप्रपञ्चं हि देवतिर्यङ्नरात्मकम् ।
कृष्णादेव समुद्भूतं लीनं तत्रैव तन्मयम् ॥१८॥

नृणां दुर्गतिमालोक्य ये सेवन्ते दृढव्रताः ।
कृष्णं तद्भ्रुकुटिः कालो न तान् हन्ति कदाचन ॥१९॥

अदान्ते मनसि ज्ञानयोगार्थं न यतेद् बुधः ।
गुरुसेवापरो भूत्वा भक्तिमेव सदाभ्यसेत् ॥२०॥

सर्वलोकोपकारार्थं कृष्णेन सहितास्तु ते ।
परिभ्रमन्ति लोकानां निस्ताराय महाशयाः ॥२१॥

पुत्रादीन् सम्परित्यज्य कृष्णः सेव्यो न तैः सह ।
तत्सुखं भगवान् दाता ते तु क्लिष्टिदुःखदाः ॥२२॥

परिभ्रमंस्तीर्थनिष्ठो गुरुलब्धहरिस्मृतिः ।
न सेवेत गृहान् दुष्टान् सद्धर्मात्यन्तनाशकान् ॥२३॥

सद्बुद्ध्या सर्वथा सद्भिर्न सेव्यमखिलं जगत् ।
भ्रान्त्या सद्बुद्धिरत्रेति सन्तं कृष्णं भजेद् बुधः ॥२४॥

भ्रान्तिमूलतया सर्वसमयानामयुक्तितः ॥
न तद्विरोधात्कृष्णाख्यं परं ब्रह्म त्यजेद् बुधः ॥१२॥

जीवानां ब्रह्मरूपत्वाद्दोषा अपि च मानवाः ।
जगच्च सकलं ब्रह्म ततो दोषः कथं हरौ ॥१३॥

सर्वथा सर्वत शुद्धा भक्ता एव न चापरे ।
अतः शुद्धिमभीप्सद्भिः सेव्या भक्ता न चापरे ॥१४॥

सुवर्णप्रतिमेवासौ सर्वानन्दमयोधिराट् ।
सर्वसेव्यो नियन्ता च निर्दुष्टः सर्वथैव हि ॥१५॥

सर्वभावविनिर्मुक्तः पूर्ण क्रीडार्थमुद्गतः ।
निमित्तं तं समाश्रित्य जायन्ते जीवराशयः ॥१६॥

नियन्ता जीवसंघस्य हरिस्तेनाणवो मताः ।
जीवा न व्यापकाः क्वापि चिन्मया ज्ञानिनो मताः ॥१७॥

खपुष्पादिसमत्वाद्धि मिथ्याभूतं जगद्यतः ।
अधिष्ठानाच्च सद्भानं तं कृष्णं नियतं भजेत् ॥२५॥

कालादितृणपर्यन्ता न सेव्या मुक्तिमिच्छता ।
दोषत्याजनशक्तो हि सेव्यो दाता गुणस्य च ॥२६॥

जीवेषु भगवानात्मा सञ्छन्नस्तेन तत्र न ।
भजनं सर्वथा कार्यं ततोन्यत्रैव पूजयेत् ॥२७॥

सुखसेवापरो यस्तु सदानन्दं हरिं भजेत् ।
अन्यथा सुखसम्प्रेप्सुः सर्वथा दुःखमाप्नुयात् ॥२८॥

कृष्णानन्दः परानन्दो नान्यानन्दस्तथाविधः ।
वेदा अपि न तच्छक्ताः प्रतिपादयितुं स्वत. ॥२९॥

इत्येवं श्रुतिगीतायाः सङ्क्षेपेण निरूपित ।
अर्थराशिसमुद्रो हि यथाङ्गुल्या निरूप्यते ॥३०॥

॥ इति श्रीमद्वल्लभाचार्यविरचिताः श्रुतिगीताकारिकाः ॥



## ॥ श्रुतिगीताकारिका अने सूक्ष्मटीका ए उभयने अनुसरतो वेदस्तुतिनो अक्षरशः अनुवाद ॥

### ॥ श्रुतय ऊचुः ॥

जय जय जह्यजामजितदोषगृभीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभगः ।
अगजगदोकसामखिलशक्त्यवबोधक ते
क्वचिदजयात्मना च चरतोनुचरेन्निगमः ॥ १ ॥

### ॥ कारिकाः ॥

प्राकृत्यः श्रुतयः सर्वा भगवन्तमधोक्षजम् ।
स्तुवन्ति दोषनाशाय तत्राविष्टो भवेद् यथा ॥ १ ॥

શ્રુતિ વદે છે.

જય જય અજિત ! દોષગૃહીતગુણા અજાને આપ ત્યજો, કારણ કે આપ આત્માએ સમવરુદ્ધ-સમસ્તભગ છો. અગજગદોકાની અખિલ શક્તિના હે અવબોધક ! કવચિત્ જ અજાએ પરન્તુ વસ્તુત' આત્માએ જ ચરતા આપને નિગમ અનુચરે ૧.

પ્રાકૃતી—પ્રકૃતિપ્રતિપાદિકા—સર્વા શ્રુતિ તત્ર શ્રુતિમાં જે પ્રકારે અધોક્ષજ ભગવાન્ આવિષ્ટ થાય તે પ્રકારે દોષનાશાર્થ ભગવાનને સ્તવે છે. ૧.

જય જય આપ જ સર્વોત્કર્ષે વિરાજમાન થાઓ, હે અજિત ! પ્રકૃત્યાદિ યોગનિદ્રાદિ અજાદિ કોઇ પણ આપનો જય કરી શકતુ નથી, આપ જ સર્વોત્કૃષ્ટ છો. જીવવત્ નિદ્રાભિભવે જ નહિ પરન્તુ લીલાએ જ આપે ગૃભીત-ગૃહીત--યોગનિદ્રાને આપ ત્યજો, મૂલતઃનષ્ટ કરો, જેથી સમ્યક્ પ્રબોધ થાય ભગવન્નિદ્રા માયા અને પ્રકૃતિ એ સ્વરૂપત્રય પણ વસ્તુત એક જ છે. 'જહિ' પદે માયાનું જગત્કર્તૃત્વ સુતરાં જ નિવૃત્ત થઇ ગયું, માયા તો કેવલ સ્વાપ્નસૃષ્ટિનુ દર્શનમાત્ર કરાવે છે, સત્યા સૃષ્ટિનો પણ પ્રકાર અગ્રે સ્તુતિમા જ કથાશે. અથવા, યદ્યપિ માયા સુષુપ્તિમાં પરમાનન્દ-લક્ષણગુણવતી છે, તથાપિ સ્થાવર અગ અને જઙ્ગમ જગત્ એવા દેહને વિષે સ્થિત જીવનો વ્યામોહ એ જ માયા અવિદ્યારૂપ સ્વશક્તિદ્વારા નિદ્રાલસ્યાદિરૂપે કરે છે, તેથી તાદૃશી પણ અજાને-માયાને-આપ ત્યજો, એ અજા તો કેવલ દોષગૃભીતગુણા છે, દોષાર્થ-સ્વરૂપાજ્ઞાનાર્થ-જ તેણે સત્ત્વરજસ્તમોરૂપ ગુણનું પણ ગ્રહણ કર્યું છે, તેના તે ગુણ પણ વસ્તુત' દોષગર્ભિત જ છે. આપ એ અજાને ત્યજો, કારણ કે આપ એ માયાએ કરીને નહિ પરન્તુ આત્માએ-સ્વરૂપે--જ કરીને સમવરુદ્ધસમસ્તભગ છો, ઐશ્વર્યાદિ સમસ્ત જ ભગને આપે આત્મસ્વરૂપે જ કરીને નિજ અન્તઃ

સ્થાપ્યાં છે, જેને સ્વરૂપાનન્દ વા સાત્ત્વિકાનન્દ ન સમ્ભવે ને ક્ષુદ્ર જ નિદ્રાલસ્યપ્રમાદોત્થ સુખની અપેક્ષા કરે. 'અજિત' પદે જ માયાનુ બાધકત્વ નિવૃત્ત થઈ ગયું, માયાનું ઇષ્ટસાધકત્વ પણ નિવારતા શ્રુતિ સ્તવે છે કે અગજગદોકોનાં--સ્થાવરજઙ્ગમજીવોનાં--અખિલ ઇન્દ્રિયની પણ શક્તિના હે અવબોધક ! હે પ્રકાશક ! જીવની તાદૃશી પણ શક્તિના પ્રકાશક આપ જ છો, પ્રકૃતિ પ્રકાશિકા નથી, તત્ર પણ જે જીવ આપના છે તેમની સર્વેન્દ્રિયશક્તિના પ્રકાશક તો સુતરાં આપ જ છો, તેમની પ્રકાશિકા તો કોઇ પણ અંશે પ્રકૃતિ નથી. તેથી તાદૃશી પ્રકૃતિને આપ સર્વથા ત્યજો. અસ્મલ્લક્ષણ નિગમ--વેદ--આત્માએ જ ચરતા--સ્વરૂપે જ ક્રીડન--આપનું--અનુચરણ--સેવન કરે છે, વેદકૃત સેવાની પ્રવૃત્તિમાં પણ આપને પ્રકૃતિની અપેક્ષા નથી, કારણ કે અજાએ કરીને તો ચરણ-- ક્રીડન--આપ કદાચિન્માત્ર જ કરો છો, એટલું જ નહિ પરન્તુ અજાએ કરીને આપ ક્રીડો છો ત્યારે પણ સર્વદા વસ્તુતઃ તો આપ આત્માએ-સ્વરૂપે-જ ક્રીડો છો. કોઇક નિગમ ક્વચિત્ અજાસમ્બન્ધ-પુરસ્સર ક્રીડન વદે છે તત્ર પણ વસ્તુતઃ સ્વરૂપસ્થિત આપની જ ક્રીડાનું બોધન છે. આપ કોઇ પણ અંશે પ્રાકૃત નથી, આપ પ્રાકૃતધર્માનાશ્રય જ છો, અન્યથા પ્રકૃતિસમ્બન્ધાભાવને નિરૂપતી 'અસઙ્ગો' ઇત્યાદિ શ્રુતિઓનો તેમ જ અન્ય સ્વરૂપાનન્દબોધિકા શ્રુતિનો વ્યાકોપ થાય સૃષ્ટિપ્રતિપાદિકા શ્રુતિનુ પણ પર્યવસાન શુદ્ધ જ બ્રહ્મના નિરૂપણમાં છે એ અગ્રે વિશદ થશે. (૧)

**बृहदुपलब्धमेतदवयन्त्यवशेषतया**
**यत उदयास्तमयौ विकृतेर्मृदिवाविकृतात् ।**
**अत ऋषयो दधुस्त्वयि मनोवचनाचरितं**
**कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥ २ ॥**
**सत्यो हरिः समस्तेषु भ्रमभातेष्वपि स्थिरः ।**
**अतः सन्तः समस्तार्थे कृष्णमेव विजानते ॥ २ ॥**

આ ઉપલબ્ધને અવશેષતાએ ઋષિઓ બૃહત્ અવગમે છે. કારણ કે મૃદ્વત્ અવિકૃતથી વિકૃતિના ઉદયાસ્તમય થાય છે તેથી ઋષિઓ મનોવચનાચરિતને આપમાં અવધારે છે. ભૂમાં નૃનાં દત્ત પદ અયથા કેમ થાય ? ૨.

સમસ્તમાં-ભ્રમે ભાતમાં પણ-સત્ય હરિ જ સ્થિત છે, તેથી સત્પુરુષો સમસ્ત અર્થમાં કૃષ્ણને જ વિશેષતઃ જાને છે. ૨.

આ ઉપલબ્ધ ચરાચર જગતને ઋષિઓ-બ્રહ્મવિદ અને વેદ-અવશેષતાએ બૃહત્-અક્ષરબ્રહ્મ-અવગમે છે-જાને છે કારણ કે, અવિકૃત મૃદમાંથી જેમ વિકૃતિનો-ઘટશરાવાદિનો-ઉદયાસ્તમય સમ્ભવ અને પ્રલય-થાય છે ત્યારે અવિકૃત મૃદ જ અવશિષ્ટ રહે છે તેમ, અવિકૃત બૃહદમાંથી આ ઉપલબ્ધ ચરાચર જગતનો ઉદયાસ્તમય-સમ્ભવપ્રલય-થાય છે ત્યારે પણ હેતુથી-અવિકૃતત્વ હેતુથી-બૃહત્-અક્ષરબ્રહ્મ-જ અવશિષ્ટ રહે છે. એથી જે કાંઇ મનસા વિભાવ્ય છે અને જે કાંઇ વાચાએ અનૂદ્ય છે તે મનોવચનાચરિતને વેદ અને વેદદ્રષ્ટા બ્રહ્મવિદ ઋષિઓ આપમાં જ અવધારે છે. ભૂમાં નૃનાં દત્ત પદ અયથા કેમ થાય ? જેમ ભૂમિમાં નરે સ્થાપિત પદ ભૂમિમાં જ પડે છે તેમ, આપમાં સ્થિર થતાં મનોવચનાચરિતને ઋષિઓ આપમાં જ બૃહત્વે-અક્ષરબ્રહ્મત્વે-અવધારે છે, પુરુષપ્રતિપાદિકા શ્રુતિઓનો સમન્વય અક્ષરબ્રહ્મમાં કરીને મોદને પ્રાપ્ત કરે છે. (૨)

इति तव सूरयस्त्र्यधिपतेखिललोकमल–
क्षपणकथामृताब्धिमवगाह्य तपांसि जहुः ।
किमुत पुनः स्वधामविधुताशयकालगुणाः
परम भजन्ति ये पदमजस्रसुखानुभवम् ॥ ३ ॥
कथानन्त्योक्तिहृदयास्साधनानि न कुर्वते ।
साक्षात् ते पादसंश्लिष्टास्ते किं वाच्या महाशयाः ॥ ३ ॥

હે ત્ર્યધિપતે ! ઇતિ આપના સૂરિઓ અખિલલોકમલક્ષપણ કથામૃતાબ્ધિને અવગાહીને તપને ત્યજે છે તો હે પરમ ! સ્વધામવિધુતાશયકાલગુણ જેઓ અજસ્રસુખાનુભવ પદને ભજે છે તેઓ પુનઃ કિમુત ? ૩.

જેમના હૃદયમાં કથાનન્ત્યોક્તિ છે તેઓ સાધન કરતા નથી તો સાક્ષાત્ આપના પાદસંશ્લિષ્ટ તે મહાશયવિષયક તો વક્તવ્ય જ શું ? ૩.

હે ત્ર્યધિપતે ! હે લોકત્રયના અધિપતે ! ઇતિ–એ પ્રકારે–નિશ્ચય કરીને આપના વિદ્વાન્ સૂરિઓ સાધનપ્રતિપાદિકા શ્રુતિઓ અખિલલોકમલક્ષપણ કથામૃતાબ્ધિને અવગાહીને તપને—સાધનક્લેશને—ત્યજે છે, તો હે પરમ ! આપના ધામે–સ્ફૂર્તિએ—જેમના કામાદિ આશયગુણને–જરાદિકાલગુણને-દૂર કરી દીધા છે એવા સ્વધામવિધુતાશયકાલગુણ ભગવત્કૃપાભાજન જેઓ આપના અજસ્રસુખાનુભવરૂપ પદને—ચરણારવિન્દને—સતત ભજે છે તેઓ તપઃપ્રભૃતિ ક્લિષ્ટસાધનને ત્યજે એમાં તો પુનઃ વક્તવ્યાન્તર જ શું ? (૩)

दृतय इव श्वसन्त्यसुभृतो यदि तेनुविधा
महदहमादयोण्डमसृजन् यदनुग्रहतः ।
पुरुषविधोन्वयोत्र चरमोन्नमयादिषु यः
सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥ ४ ॥
कृष्ण एव सदा सेव्यो निर्णीतः पञ्चधा बुधैः ।
शरीरदः प्रेरकश्च सुखदः शेषसत्यदः ॥ ४ ॥

જેઓ આપના અનુવિધ છે તેઓ જ અસુભૃત્ છે, અન્યથા તો દૃતિવત્ શ્વસે છે, મહદહમાદિએ બ્રહ્માણ્ડ સર્જ્યું તે પણ આપના જ અનુગ્રહથી, અન્નમયાદિમાં જે ચરમ તે પુરુષવિધ અત્ર અન્વય છે. સદસત્થી પર જે એમાં અવશેષ તે આપ જ, અને ઋત પણ આપજ છો. ૪.

શરીરદ પ્રેરક સુખદ શેષ અને સત્યદ એમ પઞ્ચધા વિજ્ઞોએ નિર્ણીત કૃષ્ણ જ સદા સેવ્ય છે. ૪.

જે જીવો આપના અનુવિધ છે–આપની સેવનામાં સન્મુખ છે-તે જ અસુભૃત્ છે, તેમના જ પ્રાણનું સાફલ્ય છે. વસ્તુત. તો આપ જ શરીરના પણ દાતા છો, અન્યથા તો બહિર્મુખ જીવમાત્ર

દતિવત્ શ્વસે છે, ભસ્ત્રાવત્ પરોપકારાર્થ જ જીવે છે, મહદાદિએ અને અહમાદિએ–મહત્તત્વાદિએ અને અહઙ્કારાદિએ પણ–આ અણ્ડને–ભગવત્ક્રીડાભાણ્ડ બ્રહ્માણ્ડને – સર્જ્યું તે પણ આપના જ અનુગ્રહથી, તે સર્જનમાં પણ તેનું સ્વતઃસામર્થ્ય નથી પરન્તુ આપના જ અનુગ્રહમાત્રથી તે મહદહમાદિએ પણ ભગવત્સેવાર્થ માત્ર આ ક્રીડાભાણ્ડ અણ્ડ આપની પ્રેરણાએ સર્જ્યું. તૈત્તિરીયોપનિષદનુશિષ્ટ અન્નમયાદિ પઞ્ચમાં પણ જે ચરમ–અન્ત્ય–પુરુષવિધ આનન્દમય છે તે પુરુષાકાર આનન્દમય આપ જ અત્ર–દેહમાં–પણ પુરુષવિધ અન્વય છો, વશન્યાયે સમાગત છો, અર્થાત્ સુખદ પણ આપ જ છો. સત્ જે કાર્ય વા કારણ અને અસત્ જે કારણ વા કાર્ય તે ઉભયથી પણ જે પર છે, આ કાર્યકારણાત્મક વ્યક્તાવ્યક્તાત્મક સ્થૂલસૂક્ષ્માત્મક સર્વ પદાર્થમાં પણ જે અવશેષ છે તે આપ જ છો. અને જે ઋત–સત્ય–છે તે પણ વસ્તુત આપ જ છો. આ પ્રકારે કર્માન્તરદેવતાન્તરોપોસિતપ્રતિપાદિકા શ્રુતિનું પણ પર્યવસાન આપના જ વિશુદ્ધ સ્વરૂપમાં થઈ રહે છે. (૪)

**उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः**
**परिसरपद्धतिं हृदयमारुणयो दहरम् ।**
**तत उदगादनन्त तव धाम शिरः परमं**
**पुनरिह यत् समेत्य न पतन्ति कृतान्तमुखे ॥ ५ ॥**
**कर्मरूपं हरिं केचित् सेवन्ते योगरूपिणम् ।**
**तेभ्योऽप्यक्षररूपस्य सेवकाः सम्मताः सताम् ॥ ५ ॥**

ઋષિવર્ત્મમાં જે ઉદરને ઉપાસે છે તે કૂર્પદૃક્ છે, જે પરિસરપદ્ધતિ દહર હૃદયને ઉપાસે છે તે આરુણિ છે, હે અનન્ત ! તેથી પણ આપના પરમ ધામ ઉચ્ચશિરનો ઉદ્ગમ છે, તેથી તેને સંક્રમીને ઇહ કૃતાન્તમુખમાં પડતા નથી. ૫.

કોઇક કર્મરૂપ હરિને અને કોઇક યોગરૂપી હરિને સેવે છે, તેઓથી પણ અક્ષરરૂપ હરિના સેવક સત્પુરુષોના અધિક સમ્મત છે. ૫.

કર્મ યોગ અને જ્ઞાન એમ ત્રિવિધ ઋષિવર્ત્મ—વેદોક્તમાર્ગ—છે, તત્ર કર્મ ઉદર છે, યોગ હૃદય છે, અને જ્ઞાન આપનું શિર છે, આ ત્રિવિધ ઋષિવર્ત્મમાં–વેદોક્તમાર્ગમાં–પણ જેઓ ઉદરને કર્મને—ઉપાસે છે તેઓ કૂર્પદૃક્ છે, તેમની દૃષ્ટિ અતિસ્થૂલ છે, તેઓ કૂર્પથી—શર્કરાથી—સૂક્ષ્મ કોઇ પણ વસ્તુને દેખી શકતા નથી, અથવા કૂપ જે કફોણિપૃષ્ઠ તત્ર જે રેખાકાર હોય છે તદ્વત્ તેમની દૃષ્ટિ હોવાથી તેઓ વેદોક્ત પણ માર્ગમાં કર્માતિરિક્ત કાંઇ પણ દેખી જ શકતા નથી, અથવા, વેદોક્તમાર્ગત્રયમાં પણ જેઓ ઉદરને–કર્મને–જ ઉપાસે છે તેમની દૃષ્ટિ રજસા પિહિત–આચ્છન્ન–હોવાથી તેઓ કૂર્પદૃક્–કંકરદૃક્–છે. જેઓ દહર–સ્વલ્પ–હૃદયને ઉપાસે છે તેઓ અરુણવર્ણજ આરુણિ–અલ્પપ્રકાશયુક્ત–છે, કારણ કે તે હૃદય પરિસરપદ્ધતિ છે. પરિતઃ સરે તે પરિસર અર્થાત્ નાડી, પરિસરની–નાડીની–પદ્ધતિ તે પરિસરપદ્ધતિ નામ નાડીમાર્ગ, તે હૃદય પરિસરપદ્ધતિ અર્થાત્ નાડીનો માર્ગ છે, તેથી તત્ર નાડીમાં સ્થિત થઈને યોગાભ્યાસે સર્વ જ માર્ગના શોધક

હૃદયસ્થભગવચ્ચિન્તક યોગીઓ દહર--સ્વલ્પ--હૃદયને ઉપાસે છે, તેથી તેઓ અરુણુવંશજન્ય આરુણિ સ્વલ્પપ્રકાશયુક્ત છે એમ કથન થયું. હે અનન્ત ! આપનુ પરમ ધામ અક્ષર છે, તેથી તે પરમ અક્ષર ધામ શિર તો ત્રૈલોક્યથી કાલથી પણ ઊર્ધ્વ જ ઉદ્દગમન કરે છે. તે અક્ષરબ્રહ્મનું આધિભૌતિક રૂપ બ્રહ્મલોક છે, તેથી આપનુ પરમ અક્ષર ધામ વેદોક્તમાર્ગત્રયરૂપ ઋષિવર્ત્મમાં શિર છે, અને તેથી તે શિરોરૂપ માર્ગ ઉચ્ચ. પરમવ્યોમ અક્ષરધામને જે પ્રાણીઓ ઉપાસે છે તેઓ તો તે ભગવત્સ્વરૂપ અક્ષરધામને પ્રાપ્ત કરીને પુનઃ ઇહ સંસારમા કદાપિ કૃતાન્તના મુખમા પડતા નથી, તેમનું કદાપિ પુનર્જન્મ થતું નથી. એ પ્રકારે કર્મયોગાદિ બહુવિધ ભગવદુપાસનનો પણ વાસ્તવ ફલનિર્ણય તો આપના જ શુદ્ધ સ્વરૂપમાં પર્યવસિત થઈ રહે છે. (૫)

**स्वकृतविचित्रयोनिषु विशन्निव हेतुतया**
**तरतमतश्चकास्स्यनलवत् स्वकृतानुकृतिः ।**
**अथ वितथास्वमूष्ववितथं तव धाम समं**
**विरजधियोन्वयन्त्यभिविपन्यव एकरसम् ॥ ६ ॥**
**सर्वत्र भगवांस्तुल्यः सर्वदोषविवर्जितः ।**
**क्रीडार्थमनुकुर्वन् हि सर्वत्रैव विराजते ॥ ६ ॥**

આપે જ કૃત વિચિત્ર યોનિમાં હેતુતાએ તત્ર સ્થિત જ પ્રવેશતા હોય નહિ શું એમ અનલવત્ સ્વકૃતાનુકૃતિ આપ તરતમત. ચકાસો છો અને વિરજધી અભિપણ્યુઓ આ વિતથમા આપના અવિતથસમ એકરસ ધામને જાને છે. ૬.

સર્વત્ર સર્વદોષવિવર્જિત ભગવાન્ તુલ્ય છે, કારણ કે ક્રીડાર્થ અનુકર્તા તે સર્વત્ર જ વિરાજે છે ૬.

આ દેવમનુષ્યાદિ યોનિ આપે ભગવાને જ કરી છે, તેથી આ અનુરૂપ વિચિત્ર યોનિમાં-શરીરમાં--પણ હેતુતાએ--કારણરૂપતાએ--આપ તત્ર સ્થિત જ છો તથાપિ તત્ર પ્રવેશ પણ કરતા હોય નહિ શું એમ તરતમતઃ-દેવતિર્યઙ્મનુષ્યાદિભાવે- આપ ચકાસો છો. દીપો છો. જેમ સર્વત્ર કાષ્ઠમાં અનલ--અગ્નિ--સ્થિત જ છે તથાપિ પુનઃ તત્ર સ્થિત પણ તત્ર પ્રવિશતો અગ્નિ દીર્ઘવક્રાદિ વર્ણભેદને -સ્થૂલસૂક્ષ્મભેદને--વિસ્તારે છે તેમ અન્તઃકરણપ્રવિષ્ટ અનુપ્રવિષ્ટ આપ પણ એક જ સતે અનલવત્--અગ્નિવત્--નાના ભાસો છો, તત્ર ઉપપત્તિ પણ છે, કારણ કે આપ સ્વકૃતાનુકૃતિ છો, જેમ શિક્ષક શિષ્યવિદ્યાને અનુકરે છે તેમ આપ ભગવાન્ સર્વત્ર સ્વકૃતને જ અનુસરો છો, આથી જગદ્રૂપે ક્રીડા કરવાને સર્વત્ર અનુપ્રવિષ્ટ ભગવાન્ તત્તદ્રૂપ થયા એમ કથન થયું. આ વિતથ મિથ્યાભૂત પણ કૃત્રિમ પાગ્ચભૌતિક યોનિમા આપનુ ધામ તો અવિતથ- સત્ય--છે એમ રજોગુણરહિત બ્રહ્મદષ્ટિ વિરજધી જાને છે, આપનું ધામ સમ છે, આપ સર્વત્ર સમ જ પ્રવિષ્ટ છો, આપ યત્ર પ્રવેશ કરો છો તત્ર પણ તત્સમ થઈને જ પ્રવેશ કરો છો એમ જ્ઞાન રજોગુણરહિત વિરજધીને થાય છે, સર્વ ભગવત્સ્વરૂપને જ અનુસરે છે, પદાર્થમાત્ર ભગવાનનુ જ અનુકરણ કરી રહ્યા છે એ પ્રકારનુ યથાર્થ જ્ઞાન તો તાદૃશ બ્રહ્મદૃષ્ટિને જ થાય છે, કારણ કે રત્ન કૃત્રિમ છે વા સહજ

છે ને તો રત્નપરીક્ષક જ જાને છે. અભિત--આ લોકમાં અને પરલોકમાં--જેમના પણ--વ્યવહાર--વિગત--વિશેષે ગત--છે તેવા સર્વવ્યવહારાતીત અભિવિપણ્યુ જ આ વસ્તુસ્થિતિને જાને છે, જે જેનો અભ્યાસ કરે તે તેનું દર્શન કરે, તેથી જેઓ વ્યવહારને પરિત્યજીને સર્વથા બ્રહ્મને જ અનુચિન્તે છે તેઓ સર્વત્ર ઘટાદિ વિકારજાતનુ દર્શન કરતા નથી પરન્તુ સર્વત્ર સમ જ બ્રહ્મનું મૃદ્વત્ દર્શન કરે છે. રસ તો અનુભવૈકગમ્ય છે, સર્વત્ર જ તે વિરજથી અભિવિપણ્યુની રતિ સમ છે, તેથી સર્વસમ જ ભગવાન્ સર્વાનુસ્યૂત અનુપવિષ્ટ છે એમ તેઓ સર્વત્ર એકરસ સમ બ્રહ્મને અનુભવગમ્યત્વે જાને છે. આ પ્રકારે અનુપ્રવેશશ્રુતિનું પણ પર્યવસાન આપમાં જ થતાં જગદ્… જગદ્રૂપમાં અનુપ્રવેશીને ક્રીડતા પણ આપ સદાસર્વદા નિર્દુષ્ટ જ છો એમ વિરજથી વિપણ્યુઓના અનુભવથી પણ સિદ્ધ થઈ રહે છે (૬)

**स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं**
**तव पुरुषं वदन्त्यखिलशक्तिधृतोंशकृतम् ।**
**इति नृगतिं विविच्य कवयो निगमावपनं**
**भवत उपासतेङ्घ्रिमभवं भुवि विश्वसिताः ॥ ७ ॥**

**गुप्तानन्दा यतो जीवा निरानन्दं जगद् यतः ।**
**पूर्णानन्दो हरिस्तस्माज्जीवैः सेव्यः सुखार्थिभिः ॥ ७ ॥**

આ સ્વકૃત પુરમાં અખિલશક્તિધૃત્ આપના પુરુષને બહિરન્તરસંવરણ અંશકૃત વદે છે એમ નૃગતિને વિવેચીને વિશ્વસિત કવિઓ ભૂમાં આપના અભવ નિગમાવપન આંઘ્રિને ઉપાસે છે. ૭.

જીવ ગુપ્તાનન્દ છે અને જગત્ નિરાનન્દ છે તેથી સુખાર્થી જીવોએ પૂર્ણાનન્દ હરિ સેવ્ય છે. ૭.

આ ભગવત્કૃત પુરમાં--દેવતિર્યઙ્મનુષ્યાદિ શરીરમાં--ભગવદંશ પુરુષ જીવ બહિરન્તઃસંવરણે આવરણકૃત ગુણદોષ રહિત જ છે, તથાપિ અંશે કૃત તે જીવ છે તેથી, જીવ વિષમ થાય છે. ભગવાન્નો અત્યન્ત વિરલાત્મા ચિદંશ જીવ છે, તે સર્વ પુરમાં પ્રવિષ્ટ સતે પણ અન્તર્બહિઃ ચૈતન્યગુણપૂર્ણ સ્થિત છે, તેથી જીવ પણ સ્વરૂપતઃ તો અવિષમ જ છે, તથાપિ વિષમભાવાપન્ન તિરોહિતાનન્દ અંશે કરીને જીવસ્વરૂપ થયો છે, તેથી સ્વભાવતઃ સ્વાનન્દાપેક્ષાર્થ જ પુરમાં પ્રવર્તે છે, અને તત્ર પુરમાં સુખને પ્રાપ્ત નહિ કરતાં વસ્તુતઃ અવિષમ જ તે જીવ વિષમવત્ થાય છે. અત્ર નિર્ણીત આ જ અર્થ ભગવાન્માં અને જીવમાં વૈલક્ષણ્યહેતુ છે, ભગવાન્ સ્વાનન્દપૂર્ણ છે તેથી તે કોઇથી પણ આનન્દને વાઞ્છતા નથી, પરન્તુ જીવ તિરોહિતાનન્દ છે તેથી યતઃકુતશ્ચિત્ પણ આનન્દને અપેક્ષે છે, અને તેથી સ્વરૂપતઃ અવિષમ પણ જીવ સ્વભાવતઃ વિષમવત્ થાય છે, એમ 'અંશકૃતમ્' પદ સૂચન કરે છે. વસ્તુત તો આત્મસૃષ્ટિ જ હોવાથી અંશકૃતત્વ પણ વાદમાત્ર છે એમ 'વદન્તિ' પદનો ધ્વનિ છે. આ પ્રકારે રમણાર્થ જીવવૈલક્ષણ્યનું જ્ઞાન જેમને નથી તેઓ જ ભગવત્સેવના કરતા નથી એમ નિરૂપતાં શ્રુતિ કથે છે કે એ પ્રકારની નૃગતિને–

જીવમતિને–જાનીને નિપુણ કવિઓ તો આપના જ અભવ–જન્માદિનિવર્તક–ચરણને ઉપાસે છે, આનન્દાર્થે જ જીવની પ્રવૃત્તિ છે, અને આનન્દ તો આપના સ્વરૂપમાં જ છે. યત્ર જીવનો પણ આનન્દ તિરોહિત છે તત્ર જડમાં તો આનન્દનો ગન્ધ પણ નથી જ તથાપિ, જેમ અત્યન્ત નિર્જલ પણ ભૂમિમાં ભ્રાન્તને જલની પ્રતીતિ થાય છે તેમ મરીચિકાવત્. સ્રક્ચન્દનાદિમાં આનન્દ કલ્પીને લોક ભ્રાન્ત થાય છે. સ્વમાં વિદ્યમાન હોય તે જ આનન્દનું દાન તે વસ્તુ કરી શકે. પરન્તુ જીવમાં અને જડમાં પણ વિદ્યમાન જ ન હોય તાદૃશ આનન્દનું દાન જડજીવ કરી શકતાં નથી, પણ્ડિતો–નિપુણ કવિઓ–આ અર્થને જાનીને આપ ભગવાનના આનન્દનિધિ ચરણકમલને ઉપાસે છે. જેમ સકલ બીજનું આવપનસ્થાન ક્ષેત્ર છે તેમ, સકલ વેદોક્તકર્મફલનુ પણ સફલત્વ આપના ચરણકમલમાં છે. સર્વ વેદ આપના ફલસાધનરૂપ ચરણનુ જ પ્રતિપાદન કરે છે, અને યાગસ્વર્ગ પણ વસ્તુત: આપના ચરણકમલનું જ અમુક રૂપ છે, તેથી વેદોક્તિએ પણ સ્વર્ગાદિ આનન્દ ભગવચ્ચરણારવિન્દથી અન્યત્ર નથી એમ સિદ્ધ થઈ રહે છે આપનું ચરણકમલ સ્વતઃ અભવ–સર્વથા ઉત્પત્ત્યાદિરહિત–છે એટલું જ નહિ પરન્તુ તે અન્યના પણ ભવનું–ઉત્પત્ત્યાદિનું–નિવર્તક પણ છે. સ્વર્ગાદિમાં તો વિશેષના અદર્શનથી આનન્દનો સંશય પણ રહે પરન્તુ ભૂમિમાં તો તેવી પણ સમ્ભાવના નથી, તેથી નિપુણકવિઓ તો ભૂતલમા જ આપ ભગવાન્માં વિશ્વાસને સ્થાપે છે, અથવા તીર્થાદિસમ્ભાવનાએ શુદ્ધાન્તઃકરણ થઈને ભૂમિમાં જ તે નિપુણ કવિઓ આપમાં વિશ્વસે છે, અન્યત્ર લોકાન્તરમાં તો ભોગાભિનિવેશ છે, તેથી તત્ર લોકાન્તરમાં પણ ન વિશ્વસતાં તાદૃશ કવિઓ તો ઇહ ભૂલોકમાં જ આપના ચરણકમલમાં શ્રદ્ધાને રક્ષીને કૃતકૃત્ય થાય છે, અને તેથી જીવાનુપ્રવેશપ્રતિપાદક શ્રુતિઓનું પણ પર્યવસાન પૂર્ણાનન્દ આપમાં જ થઈ રહે છે. (૭)

**दुरवगमात्मतत्त्वनिगमाय तवात्ततनो–**
**श्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ।**
**न परिलषन्ति केचिदपवर्गमपीश्वर ते**
**चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥ ८ ॥**
**कृष्णे हरौ भगवति परमानन्दसागरः ।**
**वर्तते नात्र सन्देहः कथा तत्र नियामिका ॥ ८ ॥**

દુરવગમ આત્માના તત્ત્વના નિગમાર્થ આત્તતનુ આપના ચરિતમહામૃતાબ્ધિપરિવર્તપરિશ્રમણ ચરણસરોજહંસકુલસઙ્ગ વિસૃષ્ટગૃહ કોઇક તો અપવર્ગને પણ હે ઇશ્વિર પરિલષતા નથી. ૮.

કૃષ્ણ હરિ ભગવાન્માં પરમાનન્દનો સાગર છે એમાં સન્દેહ નથી તત્ર કથા નિયામિકા છે. ૮.

આત્મા દુરવગમ છે, આત્માનો ગમ–જ્ઞાન–દુઃખે અવગત છે, કોઇ પણ આત્માને જાની શકતું નથી, એવા દુરવગમ આત્માનુ તત્ત્વ પણ દુરવગમ જ છે, તેથી દુરવગમ આત્માના દુરવગમતત્ત્વના નિગમાર્થ–નિતરાં જ્ઞાનાર્થે–આપે તનુનો–શ્રીઅઙ્ગનો–સ્વીકાર કર્યો છે. આત્મતત્ત્વના જ્ઞાનાર્થ લોકાવગત કોઇ પણ કારણ નથી, તેથી તાદૃશ આત્મતત્ત્વના નિગમનાર્થ–નિતરાં ગમાર્થ–શ્રીઅઙ્ગનો પ્રાદુર્ભાવ ભગવત્સ્વરૂપમાં થયો. જીવનું દેહગ્રહણ અજ્ઞાનનુ કાર્ય છે, પરન્તુ ભગવાન્નુ તનુગ્રહણ

અદ્ભુતચરિત છે, અજ્ઞાનકાર્યસદૃશ તનુસ્વીકાર પણ કરીને-સ્વરૂપાનન્ય શ્રીઅઙ્ગનો પ્રાદુર્ભાવ કરીને-દુરવગમ આત્માના દુરવગમ તત્ત્વનો નિગમ આપ સર્વને કરાવો છો, તેથી અદ્ભુતકર્મા ભગવાન્ આપનું ચરિત જ મહાન્ અમૃતાબ્ધિ છે. લોકસિદ્ધ સમુદ્રથી પણ ભગવચ્ચરિતાબ્ધિ અધિક છે, તેથી તે મહાન્ છે. આ લોકસિદ્ધ સમુદ્રનો તો કથઞ્ચિત્ શોષ પાન બન્ધન વા ઉલ્લઙ્ઘન પણ થઈ શકે, પરન્તુ આપના અદ્ભુત ચરિતામૃતાબ્ધિનો તો શોષાદિ કોઇ પણ કરી શકતું નથી, તેથી ભગવચ્ચરિતનું મહત્ત્વ અબ્ધિત્વ અને અમૃતત્વ પણ આ પ્રકારે ઉપપાદિત કર્યું. તાદૃશ ચરિતમહામૃતાબ્ધિમાં પરિવર્તાર્થ-- બહુધા આલોડનાર્થ--જેમણે પરિશ્રમણ--પરિતઃ શ્રમ--કર્યું છે એવા કોઇક વિરલ ચરિતમહામૃતાબ્ધિપરિવર્તપરિશ્રમણ ભક્તમાં જ તાદૃશ પણ મહામૃતાબ્ધિચરિતને આલોડવાનું સામર્થ્ય હોય છે, તેથી સ્વયં પ્રાપ્ત અથવા કોઇએ દીયમાન અપવર્ગને--મોક્ષસુખને-- પણ તેઓ મહારસપાનમત્તવર્તુ ચ્છતા નથી, બહુધા પ્રરોચના સતે પણ તેમને તાદૃશી અપવર્ગેચ્છા જ ઉત્પન્ન થતી નથી, અત્ર વક્તવ્ય જ શું ? હે ઈશ્વર ! આપ સ્વતઃ પણ કદાચિત્ તેમને અપવર્ગનું દાન કરો તથાપિ આપ ઈશ્વરે પણ દીયમાન અપવર્ગને -મોક્ષસુખને--વિરલ ભક્તો કદાપિ પણ પરિલપના નથી. જેમ લોકમાં કોઈક એકાકી રસાનુભવ કરે તદપેક્ષાએ પણ સર્વ યોગ્યે સહ વર્તમાન હોય તો રસાનુભવ સુખાધિક્યહેતુ થાય છે તેમ એકાકયનુભૂત મોક્ષાનન્દની અપેક્ષાએ પણ ચરિતમહામૃતાબ્ધિપરમાનન્દરસ અધિક છે એમ નિશ્ચય કરીને, આપના ચરણસરોજમાત્રનો એક અનન્ય આશ્રય કરીને સ્થિત પરમવિવેકવાન્ હંસસમૂહના સઙ્ગાર્થ તાદૃશ હંસકુલે સહ પરમાનન્દ બહુધા ભોક્તવ્ય છે એ અભિલાષાથી ને કથાભિલાષી વિરલ ભક્તોએ સ્વગૃહનું પણ વિસર્જન કરી દીધું છે, તેથી મોક્ષાપેક્ષાએ પણ ભગવત્કથાશ્રવણરસ અધિક છે એમ સિદ્ધ થઈ રહે છે, અને નત્ર ગૃહ--ગૃહસ્થાશ્રમ--પ્રતિબન્ધક હોવાથી ગૃહસ્થિતિમાં ભગવત્સેવકોની સમ્મતિ ન હોવાથી તાદૃશ વિરલભક્તો વ્યસનાવસ્થામાં તો ગૃહનો પણ ત્યાગ કરીને કથાપરમાનન્દરસભોગ કરે છે, તેથી આનન્દપ્રાપ્ત્યર્થત્યાગપ્રતિપાદકશ્રુતિનું પણ સ્વારસ્ય સદાનન્દ દુઃખમાત્રહર્તા ઐશ્વર્યાદિસમ્પન્ન આપમાં વિદ્યમાન પરમાનન્દસાગરની નિયામિકા જે કથા તે કથાનિષ્ઠ રસમાં જ થઈ રહે છે. (૮)

त्वदनुपथकुलायमिदमात्मसुहृत्प्रियवच्
चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ।
न बत रमन्त्यहो असदुपासनयात्महनो
यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥ ९ ॥

असत्सङ्गो न कर्तव्यो भक्तिमार्गस्य बाधकः ।
देहे ह्यनुगुणे कृष्णे नेन्द्रियाणां प्रियं चरेत् ॥९ ॥

આ કુલાય ત્વદનુપથ આત્મસુહૃત્પ્રિયવત્ ચરે છે તથા હિત પ્રિય અને આત્મા આપ ઉન્મુખ સતે પ્રિય આત્મામાં જે રમણ કરતા નથી તેઓ અહો અસદુપાસનાએ આત્મહા છે, જે અસદુપાસનામાં અનુશયવાન્ ઉરુભયમાં કુશરીરભૃત્ ભ્રમણ કરે છે. ૯.

ભક્તિમાર્ગનો બાધક અસત્સઙ્ગ કર્તવ્ય નથી. દેહ અને કૃષ્ણ પણ અનુગુણ સતે ઇન્દ્રિયોનું પ્રિય ચરવું નહિ. ૯.

જેમ પક્ષીઓને કુલાય–નીડ–હોય છે તેમ જીવને કુલાયરૂપ આ શરીર છે, કિઞ્ચ આ શરીર પણ ત્વદનુપથ છે, આપને અનુગુણ છે, સેવકરૂપસર્વેન્દ્રિયયુક્ત બલવિવેકાદિયુક્ત છે, તેથી ઇન્દ્રિયવત્ત્વ જ સેવામાં અધિકારી—વિશેષણ–છે, તાદૃશ ત્વદનુપથ શરીરમાં જો અહન્તામમતા દૃઢ હોય ત્યારે તો જીવ તે શરીરને ભગવદર્થ આપૂરન્ત પણ કરે, પરન્તુ આ શરીર તો કુલાયમાત્ર છે, જેમ પક્ષ સમાગત થયે પક્ષીઓ પણ કુલાયમાં સ્થિતિ કરતા નથી તેમ આ શરીર પુત્રાદિથી ભિન્ન છે કુલાયવત્ કેવલ ગૃહરૂપ છે તત્ર ઇન્દ્રિયાદિથી પણ શરીર ભિન્ન છે એમ વિવેક પ્રાપ્ત કરીને શરીર સર્વદા કુલાયવત્ ત્યક્તવ્ય જ છે એમ જનાતાં તત્ર અહન્તામમતાની દૃઢતાનો અવકાશ જ નથી. તત્ર પણ આ દેહ આત્મવત્ સુહૃદ્વત્ અને પ્રિયવત ચરે છે, જેમ આત્મા સ્વાધીન હોય છે તેમ આત્મવત્ શરીર પણ સ્વાધીન છે, સ્રીદેહવત્ વા સેવકદેહવત્ આ શરીર પરાધીન નથી, તથાપિ આત્મવત્ ચરતું પણ શરીર જો ધર્મકાર્યમાં અસહિષ્ણુ હોય તો પણ કાર્યસિદ્ધિ થાય નહિ, પરન્તુ આ શરીર તો સુહૃદ્વત્–મિત્રવત્–આચરે છે, જેમ મિત્ર આપણું હિત જ કરે છે તેમ આ ધર્મ–કાર્યાદિમર્મ શરીર પણ જીવનુ હિત જ ચરે છે, કિઞ્ચ આ શરીર પ્રિયવત્ ચરે છે, જેમ પ્રિય સ્નેહવિષય હોય છે તેમ આ શરીર પ્રિયવત્ સ્નેહમાત્ર ચરે છે, જીવનું સ્નિગ્ધમાત્ર આચરે છે, મહાપાતકયુક્તવત્ આ શરીર દ્વિષ્ટ–દ્વેષ–ચરતુ નથી તેમ જ ચણ્ડાલાદિદેહવત્ આ શરીર જીવને મનોપીડા પણ ચરતું નથી. પ્રિયવત્ ચરતું આ શરીર કોઇ પણ અંશે જીવમાં ત્રપાને ઉત્પન્ન કરતું નથી, તત્ર પણ હિત પ્રિય અને આત્મા એવા આપ ઉન્મુખ છો, સ્વસેવાર્થ બ્રાહ્મણાદિદેહદાને આપ સમ્મુખ જ છો, સ્વસેવાર્થ બ્રાહ્મણાદિદેહને ઉત્પાદીને મત્સેવા ક્યારે કરશે એમ આપ ઉન્મુખ છો, કિઞ્ચ આપ હિતકારી છો, જ્યારે પ્રમાદથી તે દેહનું કાંઇ પણ વિઘાતક પ્રાપ્ત થાય છે ત્યારે આપ તેનું પાલન કરો છો એ સુહૃત્કૃત્ય છે, કિઞ્ચ, આપ પ્રિય છો, પ્રીતિવિષય છો, એટલું જ નહિ પરન્તુ આત્મા પણ છો, બહિઃપ્રિયકાર્યકર્તા કોઇક ભિન્ન પણ થાય, પરન્તુ આપ તો આત્મા હોવાથી જીવનું અન્તઃપ્રિયકાર્ય કર્યા જ કરો છો, તેથી ખેદનો–શ્રમનો–પણ અવકાશ નથી, અથવા આપ આ દેહના આત્મા છો, અને આત્મા તો સર્વને જ આવશ્યક છે, આત્માના અભાવમાં કોઇએ કાંઇ પણ શક્ય નથી. આ પ્રકારે એમના સાધન શરીર અને સેવ્ય આપ અનુગુણ સતે પણ જેઓ પ્રિય આત્મામાં રમણ કરતા નથી, સર્વાત્મભાવે આપની સેવના કરતા નથી, તત્ર હેતુ અસદ્‌ની ઉપાસના છે, અસદ્‌ની ઉપાસનાએ દુષ્ટસઙ્ગથી તેઓ આપનુ ભજન કરતા નથી, 'ઉપાસના'પદે બાહ્ય ક્ષુદ્રદેવતાનો પરિગ્રહ થાય છે. તે બાહ્ય ક્ષુદ્રદેવતાનો સકૃન્માત્ર પણ સઙ્ગ થતાં અનન્યતાભ્રંશ થતાં ભગવદ્ભજન નષ્ટ થઇ જાય છે, અસદુપાસનાએ દુષ્ટસઙ્ગથી જેઓ આપનું ભજન કરતા નથી તેઓ શરીરસામગ્રી અને સેવ્ય આપ એમ ઉભયે પણ અનુકૂલ સતે કેવલ આત્મહા છે, આત્મઘાતી છે, સર્વ અનુકૂલ સતે પણ પૂર્વકૃત પાપથી સર્વપુરુષાર્થનાશક અસત્સઙ્ગ તેમને પ્રાપ્ત થાય છે, અને તેથી અન્તે તેઓ આત્મહા થાય છે, અથવા અસત્–દુષ્ટ–ઇન્દ્રિયોની જ ઉપાસનાએ તેઓ આત્મહા થાય છે, જેમાં–જે અસદુપાસનામાં વા જે અસત્સઙ્ગમાં–અનુશયે–અન્તઃકરણવાસનાએ–યુક્ત તે આત્મહા ઉરુભય સંસારમાં કુશરીરને પ્રાપીને અનેક જન્મમાં પરિભ્રમણ કર્યા કરે છે પરન્તુ કદાચિત્ પણ સુખલેશને પ્રાપ્ત કરી શકતા નથી, અહો આશ્ચર્ય ! બતપદ ખેદવાચક છે, સકલેન્દ્રિયસામર્થ્યયુક્ત ભગવદૈહિકધર્મૌપયિક સર્વાનુગુણ શરીર પ્રાપ્ત કરીને અને સર્વાત્મતાએ આપ ઉન્મુખ પણ સતે જે આપમાં રમણ કરતા

